# ||कल्पनाकारशतकम्||

प्रणेताऽनुवादकश्च –
**आचार्यो हिमांशुगौडः**
**व्याकरणाचार्यः,शिक्षाशास्त्री(B.Ed.),विद्यावारिधिः(Ph.D.)**

**ISBN -978-81-943558-7-8**


**प्रथम-संस्करणम् - २०२०**
**२०० प्रतयः**

**प्रकाशकः**

## टू ह्यूमेनिटी फाउण्डेशन

**गाजियाबाद**

****************************************************************************

*********************************************************

# भूमिका

************************

कल्पनाकारो वर्तते कश्चित्प्रकृतिप्रियस्सामाजिककार्यकर्ता श्रीनिवासञ्ज्ञाख्यः। तेन च नव्यायुषैव यूना असहायदरिद्रबालानां राजमार्गेष्वितस्ततः क्षुत्पिपासाकुलत्त्वाद्भिक्षावृत्तिजीवितानां शिक्षावञ्चितानां दौर्भाग्यदौःख्यविपद्ग्रस्तेषु जीवनेषु यथाशक्यमन्नवस्त्रशिक्षादिदानैस्तेषां स्नेहवाराभिसेचनैश्च सौख्यानि श्रीयन्ते, तेषां भाविमङ्गलानि च पुष्यन्ते। न केवलं स युवा सामाजिककार्यकर्तृत्त्वेनैव लक्षणीयोऽपितु स स्वयमपि सुशिक्षितो नवकल्पनाढ्यो भ्रमणप्रियश्च वर्वर्त्ति। स प्रकृतिं विलोक्य नवत्त्वापन्नो जायते प्रत्येकामपि सामाजिकीं घटनाञ्चावलोक्य स्ववैशिष्ट्यसम्भृतं मतं प्रकटीकरोत्यपि। स मित्रप्रियो हास्यशीलस्सन्नपि विशिष्टचिन्तनसम्पन्नः प्रकृतिदृश्यसमाहित इव मयाऽदर्शि। स स्वमुखपुस्तके प्रायो यात्रागतस्य विविधस्थानगतस्याऽऽत्मन एव चित्राणि विन्यस्तीकरोति, यैस्तानि चान्यजनैरपि विलोक्यन्ते। क्वचित्स स्वाश्रितनिर्धनबालकैस्सह प्रसन्नतापन्नो हास्यमुखस्स्वचित्राणि विन्यस्य प्रेरयतीवान्यानपि परोपकाराय। एवंविधस्य चाल्पायुषो यूनो विलोक्य चर्यामीदृशीं प्रकृतिहर्षसंयुक्ताम् असहायसहायसम्पन्नां वृत्तिञ्चाप्यवलोक्य तस्य मुखपुस्तकस्थानि कानिचन शतशश्चित्राणि अवलोक्याहं यस्मिन् भावे निमग्नोऽभवं, यश्च मय्युत्पन्नो हर्षस्तमेवात्र शतश्लोकैर्निझरामि। स्यादप्यन्यो विचारस्तस्य कल्पनाकारस्य पृथक् तच्चित्रसन्दर्भे, किन्तु नाहं तच्चिन्तनपरः, अहन्तु तत्तत्प्रकृतिदृश्यजमोदकाव्यशब्दविन्यासमेवात्र निधत्तवान्। स च श्रीनिवासवर्यः स्वयमेव स्वकीयाम्प्रकृतिप्रियतां वीक्ष्यात्मन उपनाम कल्पनाकार इति श्रितवानस्ति। तस्य च विलोक्यापि चित्राणि नैकमोद्यसमन्वितानि, कल्पनालोकान्वितानीव भान्ति, कस्यचिदपि जनस्योत्पद्येत एव हर्षः, का पुनोऽस्मादृशाङ्काव्यमोदिनाङ्कथा। तथैव तेन नैर्धन्यविडम्बनाग्रस्तबालानां शिक्षादिप्रदानाय *आरोह* इत्याख्या या असर्वकारीयसंस्थोद्घाटिता, तस्याश्चापि तेन यथाकालं चित्राणि संस्थाप्यन्त एव स्वमुखपुस्तके। तानि विलोक्य मद्धृदये यो भावोदयो जातस्तस्यैव हर्षविशेषोऽत्र शतश्लोकैर्दर्शितः। एवञ्च रसिकजनाः

निमज्जन्त्वस्मिन् दिनत्रयरचिते चैत्रनवरात्रप्रतिपत्प्रारब्ध-
तृतीयासमास्त्यापन्ने  शतककाव्ये, भरन्तु च
कल्पनाकारकविकल्पनामोदञ्चेत्याशाऽऽशस्तोऽहम्

**- हिमांशुर्गौडः**

*********************************************************************

*****************************************************

**।। श्रीमत्त्र्यम्बकेश्वरचैतन्यमहाराजाः ।।**

**********

श्रीहरिः

हिमांशुमानसाम्बुपूरपूर्णपावनी सदा,
कवीन्द्रवृन्दवंशजातहंसमौक्तिकाकरा।
अमन्दछन्दशोभिता विभावभूतिवैभवा,
अनल्पकल्पनासुकल्पकल्पनासरिच्छुभा।।

जन्मान्तरीयसंस्कारवतोस्याचार्यपादपद्ममकरन्दमिलिन्दायमाणस्यकुमुदोपमस्य हिमांश्वितिनामधेयस्य महाकवेः कविताकौमुदी मानवमतेर्मालिन्यमपहरति, प्रसुप्तान्तश्चेतनायाः प्रकाशमुद्भासयति, भारतीयसंस्कृतेःप्रभावं लोकेषु प्रतिष्ठापयति,सात्त्विकान् सद्भावभरितान् विचारान् सज्जनानां चित्तेषु संस्थापयति, दुर्वृत्तानां दुर्भावनां विदारयति ।

कविकर्मनिकषायमाणायामस्यां काव्यकौमुद्यां सहृदयहृदयानां भाषार्थतत्त्वविदामनुरूपायाः भाषायाः रमणीयत्वं, रसपरम्परापरिपाकत्वं, अलंकाराणामनौपम्योपयोगित्वं, छन्दसामनुशासितमटन त्वञ्च वर्वर्ति।

अस्य कल्पनाकारशतकाख्यस्याप्रतिमस्य काव्यस्य तथा काव्याध्वरानुष्ठातुस्सौमङ्गल्यं भूयादित्यभ्यर्थना भगवत्या राजराजेश्वर्या ललिताम्बायाः पादपद्मयोः चेक्रिये।

शुभेच्छुः

**त्र्यम्बकेश्वरश्चैतन्यः**

****************************************************************************

***********************************************************

## ।। डॉ.महेशनारायणशास्त्री ।।

************************

गीर्वाणगिरायां विलसति सुदीर्घा परम्परा सुललितशब्दशय्यासमलङ्कृतस्य पद्यकाव्यस्येति को न वेत्ति? कालिदासभारवीमाघसदृक्षाणां कालजयिनां काव्यकाराणां प्रौढा प्राञ्जला हृदयहारिणी पद्यरचनाऽद्यापि सम्मोहयति कोटिश:पाठकान्। सेयं परम्परा गच्छता कालेन नो विरलायितेति प्रमाणयत् सुमसृण-सुललित-प्रौढ-प्राञ्जल-पद्यनिबद्धं युवकवीनां डा.हिमांशुगौडवर्याणां विविधविषयान्वितं पद्यकाव्यं "कल्पनाकारशतक"शीर्षकवहमवेक्ष्य भवेत्सुमहती प्रसन्नता।

इदं काव्यं वीक्षणे लघुकलेवरं परं नानाकाव्यकलाकलिततत्वादात्मनि महन्ननु। एवमाभाति यत्कवेश्चेतसा समं तद्धस्तपल्लवलालितकलमस्य किमपि सामञ्जस्यमिव विद्यते।

पद्यकाव्यस्यास्य मनोमोहकशैली गुणग्राहिणां हृदयानि बलादपहरेत्। प्रकाशनञ्च काव्यस्यास्य द्विगुणयेत् काव्यप्रणेतुर्यशोधवलिमानमित्यत्र नास्ति संशीतिर्मनागपि।

नूनं काव्यमिदमविरतं सकृद्वा पठनीयं संस्कृतज्ञैरित्यभ्यर्थये। स्वभावकविरयं चिरं जीव्यात् सारस्वतकार्यञ्चाविच्छिन्नतया निर्वर्तयेदिति चाशास्य युवकविं डा.हिमाशुगौडञ्च  वर्धाप्य विरमामि वाग्व्यापारात्।

उद्भट्ट:काव्यनिर्माणे,हिमांशुरिति सत्कवि:।

उद्भटश्शब्दसंस्फोटे,भट्टान् भट्टाँश्च जेष्यति।।

**भावत्क:**

**महेशनारायणशास्त्री**

**टोङ्कः,राजस्थानम्**

*****************************************************************

**************************************************

# ||कल्पनाकारशतकम्||

*****************************************************************

**************************************************

*इह कल्पनाकारेण स्वकीयाया आरोहेत्याख्यायाः संस्थायाः बालैस्सह प्रसन्नमुखानि चित्राणि न्यस्तानि तदेव दृष्ट्वैतदुक्तं कविना -*

आरोह नूनं तमस: प्रकाशं
तनुष्व नैराश्यभृतां सुहासं
दारिद्र्यवैवश्यविभाग्यभाजां
दु:खं द्रुतं दूरय कल्पनाढ्य ।।१।।

हासं ददातु यदि बालमुखेषु कार्यै:
आपत्तिमग्नगतिकेषु सुखं भरेच्चेत्
तच्चेश्वरस्य परिपूजनमस्तु,पुण्यं
त्वज्जीवनं भवतु, सत्फलसम्भृतं च ।।२।।

ग्रन्थानधीत्य प्रबुधा भवन्ति
जनास्तथापत्तिनदीस्तरन्ति
वित्तादियुक्ता शुभकीर्तियुक्ता:
बालान्प्रपाठ्य श्रय पुण्यलोकम्।।३।।

*अस्मिन् श्लोके लुञ्चितकेशवतो यूनः कल्पनाकारस्य चिन्तने स्वचिन्तनं निगुम्फ्य श्लोकेन दर्शयत्यत्र –*

अकथ्यरूपोऽस्म्यथवाऽस्मि वन्यो
नियन्त्रणाद्वर्जितजीवनोऽस्मि
युवाऽस्मि मुक्तोऽस्मि सुखाश्रितोऽस्मि
ज्ञाऽस्मीति वा लुञ्चितकेशवाँश्च ।।४।।

*अत्र च कविस्स्वयमेव कल्पनाकारस्य प्रसन्नतापन्नस्य कूर्दतश्चित्रं दृष्ट्वा वदति तच्चित्रं स्वीयैर्भावैर्वर्णयति च –*

रिक्तोऽसि मुक्तोऽसि सुखाश्रितोऽसि
नौकां समाश्रित्य निकूर्दसीव
मेघान्विलोक्याऽम्बुधिखस्थिताँश्च

सर्वं नवं भावमिवाकरोति ।।५।।

*अस्मिन् चित्रे यात्रागतः कल्पनाकारः किञ्चित्प्रकृतिदृश्यं पश्यन् स्थितोऽस्ति तद्दृष्ट्वा कविर्वक्ति –*

यात्रारम्यसुदृश्यदर्शनरत: किं हार्दिकं मन्यसे?
नानारङ्गविरङ्गसुप्रकृतिजं चोद्भावने शक्नुषे?
कल्पालोकचराय मादृशजने सन्दर्श्य चाशोभसे!
एवं मां च विलोक्य काव्यगतिकं किञ्चित्क्षणं मोदसे?६?

*अत्र चित्रे कृत्रिमे तडागे श्वासवायुकोषं स्वपृष्ठे धृत्त्वा कल्पनाकारस्सुखेन तरणरतस्तदेव विवक्ति -*

श्वासवायुं समानीय त्वन्तडागजले भ्रमन् ।
मत्स्यीभावं समाश्रित्य मानुषो लक्ष्यसे मया ।।७।।

*इहापि आरोहाख्यस्वसंस्थायाः निर्धनबालैस्सह प्रसन्नमुखं नायकं कविर्वर्णयति -*

दु:खं विनश्यैव सुखं प्रदत्तं
सत्कार्यभाग्भिस्सुकृतं हि लब्धं

गर्तङ्गताँश्चोद्धरतीव यद्वा
'आरोह' कर्म त्वमथापि तद्वै ।।८।।

*अत्र क्वचिद् बालकपाठनकार्यक्रमे यातेन नायकेन प्रोक्तं यन्मया रात्रित्रयेण शयनं न कृतं कार्यलग्नतया, तदेव दृष्ट्वा कविस्तं प्रशंसति –*

रात्रित्रयं जागरणं हि यत्ते
बालेभ्य एवास्ति समर्पितं वा
विद्याप्रदानं भुवि चाक्षमेभ्य:
किं पुण्यमन्यत् नर ईक्षमाणा:?९?

*अत्र निर्धनबालेभ्यः पुस्तकदानकर्तृकेन नायकेन चित्र न्यस्तं, तदेव वक्ति कविः –*

ये पुस्तकानां क्रयणेऽसमर्था:
विद्यार्थिनश्चैव सदा शिवार्था:
दद्यात्कृपाभिश्च परोपकारे
चेत्पुस्तकं तत्सुकृतं महच्च ।।१०।।

त्वत्सत्यकामैर्भविता सुभावी
हृदा परेषां शुभभावयुक्तो
निस्स्वान् सदा पाठयतात्सुना चेत्
निस्स्वार्थभावैः किमु वाऽन्यकृत्यैः?११?

*इह कश्चिद्दुर्मनाः विद्यार्थिकलङ्को नारीमिव वेशं धृत्त्वा आन्दोलनं करोति, तच्चित्रमवलोक्यैव वर्णयति –*

नराश्च नारीरिव वर्तमानाः
आन्दोलनेष्वेव कृतावधानाः
धिक्कारमेषां स्वकुले कलङ्काः
क्व यान्ति लक्ष्यं न वेद्मि ज्ञा!ऽहम्।।१२।।

*सङ्गीतवाद्यरतानां चलच्चित्रं विहितं कल्पनाकारेण, तदेव वर्णयति कविरत्र श्लोकद्वयेन –*

सङ्गीतलोके हि जनाः प्रलग्नास्-
ताने स्वरे झङ्कृतिलोकमग्ना
अहो सरस्वत्यभिसंविलासो
भासो विमुच्चान्यतमो विभाति ।।१३।।

त्रिशूरके पंचकवुप्रसिद्धे
संगीतवाद्यो भवतान् "मिलाऊ"
"पंजारि"नाम्नाऽप्यभिधीयमानो
शक्तेस्सुपीठे परिवाद्यतेऽद्य ।।१४।।

*अत्र बालप्रियः कल्पनाकारः प्रसन्नमुखबालानां चित्रं न्यस्यति, तच्च कविर्व्याख्याति -*

बाला: न जातिं नहि देशमन्ये
परापरं वाऽपि विदन्ति लोके
सुखैर्वसन्तीति विलोक्य विद्वन्!
बालत्त्वमेतुं मनसीव वीप्सा ।।१५।।

*अत्र कल्पनाकारेण विन्यस्तं प्रकृतिचलच्चित्रं दृष्ट्वाह कविः -*

अहो सुरम्यं हि दिनान्तदृश्यं
यत्त्वं गवाक्षात्परिलोकमान:
नगान्तदृष्टिस्तव नीललोके

सुगीतवाद्यै रमयेन्मनांसि ।।१६।।

*कोरोनाख्यविषाणुभये नरेन्द्रमोदिना देशजनतायै सायङ्काले शङ्खघण्टादिकधमनाय निवेदनं कृतमस्ति, तच्च मंगलोरस्थितः कल्पनाकारोपि करोति, तदेव दृष्ट्वाह -*

शङ्खध्वनैस्सर्वदिशो भरन्ती
मोदिप्रभोर्वाक्यमिवासरन्ती
दिनान्तकाले करतालशब्दै:
घण्टादिनादैर्जनता निरोगा ।।१७।।

*अत्र नीलाब्धितटस्थमवलोक्याह -*

असीमनीलाब्धिसुदृश्यमेतत्
तटस्थितस्त्वं परिलोक्यमान:
कूजन्त्यहो वा चटकास्समन्तात्
एकान्तलोके सुखतां सृजन्ति ।।१८।।

*अत्र भोपाले केचिद्धनपिशाचाः धनाय वृक्षरम्यं भोपालमेव तरुहीनं कुर्वन्ति , तं दिल्लीवत्प्रदूषयितुं यतन्ते , तद्वक्ति श्लोकद्वयेन -*

भोपालदेशं प्रकृतिप्रियं तं
आच्छादितं वृक्षगणैस्समन्तात्
हारित्ययुक्तं परिनष्टुकामा:
दिल्ल्यां हि दुष्टा परिवर्तयन्ति ।।१९।।

स्वप्नस्य लोकं जगति प्रसिद्धं
हृद्यं सुशान्तं नवताप्रदं तं
जलाशयै: पर्यटनप्रसिद्धं
दिल्लीयते तं कुजनस्समाज: ।।२०।।

*इह चित्रे निर्धनो जरा अक्षमोऽपि देहेन मानं न हित्त्वा वस्तुक्रयेन स्वजीविकायापने तत्परस्तदेवाह –*

अहो स वृद्धो न जहाति मानं
जीर्णोऽपि सन् याचति नैव भिक्षां
निर्माय च स्यूतकमापणेऽत्र

विक्रेतृभावश्, चरतात्सहायम्।।२१।।

*धर्मरूपेण मया किं श्रेय इति शङ्का यदा मन्मनसि उदेति तदा मया सूर्य एव पक्षपातहीनस्सर्वेभ्यः प्रकाशकरः श्रीयते, यतो हि स एव साक्षाद्धर्मरूप इत्यहं निश्चिनोमि – इति नेपोलियन बोनापार्ट-वर्येण प्रोक्तां सूक्तिं तद्युक्तं सूर्यचित्रं च स्वशब्दैराह –*

धर्मस्य निश्चेतृमना यदाहं
विलोक्य चैनं भुवनप्रकाशं
विभेदरूपं शिवतां भरन्तं
सूर्यं चिनोमि श्रितसौख्यलक्ष्मीम् ।।२२।।

*वर्णान्वितं चित्रं विलोक्याह -*

न ह्येकवर्णे रमते मनो मे
समस्तजीव्यं विविधार्थपूर्णं
अतस्सरेत् सप्तभिरेव वर्णै:
तेनैव नव्यत्वमियात् सुखं च ।।२३।।

*इह चित्रे रतनटाटाऽपि स्वस्मादल्पधनवतो वयोवृद्धस्य नैतिकतया चरणौ स्पृशति, तदेवाह –*

धनस्य माहात्म्यमहो गरीयान्
ततोऽप्यहो नैतिकता वरीया
संस्कारमूल्यं न शतैर्धनैश्च
संलभ्यतेऽतो कुरु तत्र यत्नम् ।।२४।।

*क्रीडास्थलं वर्णयति -*

स्निग्धेऽत्र मार्गे महतीव भाते
सङ्क्रीडनार्थं मनुजैस्सुखार्थे
विनिर्मितं रम्यशिवं तनोति
सूर्यास्तदृश्ये पदशीघ्रगामैः ।।२५।।

*केनचिन्निर्धनयूना विषमस्थितावपि प्राशासनिकसेवोत्तीर्णा तच्चित्रं दृष्ट्वा तत्प्रशंसापर आह -*

न वै श्रमो व्यर्थगतिं प्रयाति
स वै नरानुद्धरतीह नूनं
नैर्धन्यलोके विपदीव दग्धे

श्रमं प्रसाध्यैव जयेच्च लोकान् ।।२६।।

*कस्यचिज्जन्मदिनचित्रं दृष्ट्वैषोद्भावना स्फुटिता –*

जनिर्जनानां सफला सदा स्याद्
इत्येव मे मानसिकं सुचिन्त्यं
हरैकगुण्याश्रयगायनैस्सा
विनश्यतीत्येव चरेन्मनुष्यः ।।२७।।

*गणतन्त्रचित्रोद्भावनङ्कुरुते –*

गणतन्त्रदिनं भवताच्छुभदं
मम भारतकार्यविधानपरं
जनतन्त्रमिव श्रय मानुष! रे
सुखराष्ट्रविनिर्मितिभावपरम् ।।२८।।

*नगरं सर्वकारेण कीदृशं सुविधायुक्तं विधातव्यमित्येव निरूपयति –*

विमानपत्तनं च राजमार्गनिर्मितिश्च वा

भवेच्च वाचनालयो बहुत्र वैद्यकालयो
सुपाठनालयोऽपि राजपूरुषालयः पुरे
तदैव वृक्षशोभितोऽपि शोभते जनान्वितः ।।२९।।

*इह पर्वतारोहिजनस्य चलच्चित्रं दृष्ट्वोद्भावयति –*

अहो नगारोहिजनस्य धैर्यं
सत्साहसस्तद्धृदयेऽद्भुतस्स्यात्
सकृत्त्रुटिश्चापि हरेदसूँश्च
कस्तच्चरेद्वीरवरो दृढात्मा ।।३०।।

*यात्रागतं खातामुखोपरिस्थं कल्पनाकारचित्रमाह –*

हे कल्पनाढ्य! भ्रमणप्रियोऽसि
त्वं नूनमेव प्रकृतिप्रियोऽसि
विलोक्य चैतत्तव सत्यचित्रं
खातामुखस्थं नवभावमग्नः ।।३१।।

*इह चित्रे काचित् काश्मीरयवनी यौवनोल्लसिता कामिनी वृथैव मोदिनीतेः विरोधं कुर्वन्ती चलच्चित्रे दृश्यते, सा रूपवत्त्वान्मनो हरते , तदेव श्लोकद्वयेनाह –*

काश्मीरदेशः खलु कामिनीनां
शीतर्तुभावान्यतमो विभाति
देशद्विषैषा यवनी सुराज्ञो
दोषार्थने वाग्विफला विभाति ।।३२।।

द्वेषाढ्यचित्ता यवनीयमद्धा
ऽहो सुन्दरी श्रीनगरे विभाति
मोदिश्रिया सम्बलतो विभीता
अस्मत्कृतेयं हरिणीव भाति ।।३३।।

*क्वचिद्रम्यनदीपुलिने स्थितं कल्पनाकारचित्रं दृष्ट्वा मनोभावनमुद्गिरति-*

समास्थितस्त्वं ननु नाकपृष्ठे
नद्यादिरम्योच्चतलप्रतिष्ठ:
कैशौर्यचाञ्चल्यसुखस्मृतीनां

लोकोऽधुना दृष्टिगतो विभाति ।।३४।।

*इह महति जलयाने समुद्रस्थो द्विजस्सन्ध्यायां सवितारमर्चयति तद्दृष्ट्वाह –*

धन्यो द्विजोऽयं खलु शास्त्रशील:
सन्ध्यासवित्रर्चनकर्मशील:
दृष्ट्वैनमद्याऽऽधुनिकेऽपि लोके
मोदे मनो नीरतरे[1] जलाब्धौ ।।३५।।

*इह हिमाढ्यप्रदेशगतं विलोक्य कल्पनाकारचित्रम् उल्लासयति श्लोकद्वयेन -*

हिमाढ्यलोकं सुहृदावृतस्त्वं
ह्यवाप्य चोल्लाससुखं बिभर्षि
हे श्रीनिवासन्! बहुयात्रयैव
यानाश्रितानां भवतीव लभ्यम् ।।३६।।

तपोभिर्लभते नारस्सौख्यदृश्यमिति[2] श्रयेत् ।
हैमं हिमं हिमांशुं वा तपस्वी प्राप्नुते सदा ।।३७।।

*इह कल्पनाकारेण शिक्षामन्त्रिकुलपतिभ्यां शास्त्र्युपाधिर्लभ्यते, तद्विवक्ति –*

कुलपतिकरलब्धां शैक्षिकोपाधिमेवं
शुभमननसुमन्त्री सन्ददातीव यां च
श्रमभवसुखतां वा लब्धसद्वृत्तिचित्तो
सफलमिव सुभाग्यं मन्यते तत्स्वकीयम् ।।३८।।

*इह विचारशीलसुहृदं प्रशंसति -*

विचारशीला खलु मानुषेऽस्मिन्
मोदम्भरन्तीव शुभार्थशीला:
तच्चिन्तनाढ्यास्सुहृदश्च चेत्स्यु:
किं नोन्नतस्थानप्रदं विभायात् ।।३९।।

स्मृतिर्यातस्य कालस्य त्यजतीव कदापि नो ।
मित्रचित्रस्मितैरेति चेत्रैस्सौगन्धिसम्भृता ।।४०।।

अरे मित्रस्य लोकेऽस्मिन् हार्दिके चानुमेलने।

दूरत्वं गण्यतां नैव जगन्नाशं समृच्छति ।।४१।।

शब्दैर्जयन्तीव च सर्वलोकान्
आत्मन्यहो तुष्यति शैवशब्दै:
मृतेऽद्य लोके ह्यमृतं स्रवन्तश्-
शब्दा: विलक्ष्यन्त इवाऽनुविष्टा:[3] ।।४२।।

*एतदपि चित्रं विलोक्यात्मविचारप्रकटनमेव श्रीयते -*

अल्पैर्धनैश्चापि सरेत्स्वकार्यं
क्वचिल्लभेताऽपि महाधनानि
मुह्यन्ति नो शास्त्रविदो हि लोके
जीव्यं समं चोत्सवमीक्षमाणान् ।।४३।।

*सस्मितकं कल्पनाकारं दृष्ट्वोदभाव्येतत् -*

क्वचिद्धार्दमोदो ममौष्ठौ जना रे
स्मिताढ्यौ करोतीव सैवाऽत्र शोभा
परेषां मनस्सु प्रविश्य प्रफुल्लं
सुमं भाव्यमाना नवाशाऽनुभाति ।।४४।।

*इह कल्पनाकारस्य चित्रं तल्लिखितश्चैव स्वमनोभावितैर्वर्णयति -*

क्वचिज्जङ्गलित्त्वं विशेच्चञ्चलत्त्वं
क्वचिद्बालकत्त्वं क्वचित्पालकत्त्वं
क्वचिद्धासभासै: विनश्यामि चान्ध्यम्
इदं स्वीयजीव्यं तथा यापयामि ।।४५।।

*इह यानारूढं समित्रकल्पनाकारं क्वचिद्गमनोत्सुकं विभाव्य वक्ति कविः –*

अरे यानरूढा: वयं चित्तरूढा:
सुखारूढमित्राश्शुभारूढकामा;
प्रयामश्च चायं सुपेयं च पातुं
क्वचिच्चापणे यौवनोल्लासयुक्ता: ।।४६।।

*इह कस्याश्चित् सुहृद्भूतायाः युवत्याः कथां श्रावयन् कल्पनाकारः वक्ति यत् कथं तयाऽहं मलिङ्गा इत्युपनाम्ना युक्तः, तत्कथां पठित्त्वैव कविर्वक्ति –*

हे कल्पनाकार! कथा अनेका
संश्रावयँस्त्वं जनयेः प्रमोदं
वर्णाश्रितं जीवनमेवमेतदेव
का संवदेत्त्वां च पुन: मलिङ्गा ।।४७।।

सुहृद्वृतश्च चेद्यात्रां चरेद्यो भ्रमणप्रिय:!
तत्स्मृतेस्सौख्यरूपाणि रञ्जयन्ति चिरं मन: ।।४८।।

*इह भोजनालयेऽपरमित्रं भोज्यं कारयन्तं कल्पनाकारचित्रं दृष्ट्वोक्तम् –*

अनेकभोज्यावसरप्रदानै:
नानासुचर्चाभिरशेषगानै:
चित्रप्रियैश्शोभितचित्रकार!
मोदे: हरीष्टो भुवि भावकार ।।४९।।

*इह आन्दोलनकारिमहिला प्रति आरक्षकाः दण्डप्रहारोद्यताः इव , तेषाञ्च, महिलया पुष्पहस्तया सप्रेमप्रतीकारः कृत इत्याख्याभिसृतं चित्रं विलोक्योदभाव्येतत् -*

त्वं पुष्पदानैस्स्मितकैस्स्वकीयै:
सौख्याशयैस्सन्मतिभावदर्शै:
आलिङ्गयेश्चेदपि दण्डहस्तान्
मन्ये ह बुद्धा भवितार एते ॥५०॥

*कल्पनाकारस्तु वर्तते बिहारीयः, तेन बिहारसम्बन्धिचित्रं निधत्तं तद्विलोक्याह कविः -*

बिहारराज्ये प्रथितोऽस्ति लालू
नीतीशराजा प्रमुखोऽस्ति मन्त्री
तयोश्च नेत्रो: प्रभुताप्रधानो
यायात्सुखं चेद्बहुविस्मयो मे ॥५१॥

*इह होलिकोत्सवचित्रमोदं वर्णयति -*

होलीसुहर्षैरपि वर्णसक्तैर्-
जलैस्समार्द्रास्सुहृदां गणेऽस्मिन्
हसन्ति खेलन्ति सुपर्वमोदं
विभिन्नरीत्या नर आचरन्ति ॥५२॥

*इह प्राचीविदुषीत्याख्ययोः कल्पनाकारस्य महिलामित्रयोः सम्बन्धे तन्मतमेव स्वशब्दैः पुष्णाति कविः –*

कुटुम्बसम्बन्धसुदर्शरूपा
प्राची तथेयं विदुषी परा च
तवास्ति नैकार्थपरा सुयुक्ता
मैत्री सुभावोऽप्यथ कल्पनाढ्य ।।५३।।

*इह कल्पनाकारपालितपाठितबालकस्य कक्षायां प्रथमस्थानप्राप्तस्य चित्रमवलोक्याह –*

एतत्तवैव श्रमसुप्रभाव:
परोपकारस्य च वृत्तिरेषा
बालोऽयमस्व: परिदेशनैस्ते
प्राथम्यमद्येव गतश्च मोदम् ।।५४।।

*इह पततो निर्झरस्य सकाशे तिष्ठन्तं विलोक्य कल्पयति कविः –*

पतन्तमेनमाविलोक्य निर्झरं जलोज्झरं
दिनेऽपि तिष्ठसीव वा विलोकयन्नृतूनिमान्
निशागते निशापतेश्च कौमुदी हरिष्यति
मनस्तवाऽथ कल्पनाढ्य! नैकमोदरञ्जितम् ।।५५।।

*इह तु कल्पनाकारशब्दानेव श्लोकीकुरुते*
*कविस्तच्चित्रप्राप्तोत्साहः –*

मरुतां सर्सरारावे, तारकैष्टिम्टिमायिते।
निर्झरैर्झर्झरारावे दर्दुरैष्टर्टरायिते ।।५६।।

श्रूयमाणान्क्वचिद्दूरे शृगालानां ध्वनींश्च वा।
निशम्यैतन्नवश्रीक: पक्ष्मणो: झप्झपायतोः।।५७।।

*इह उदासीन इव विभातस्य सूर्यस्य चित्रणं कल्पनाकारेण*
*कृतं , तच्च विलोक्य कविस्तं प्रशंसति –*

हे कल्पनाकार! तवाऽनुभूति:
चित्रा विचित्राऽपि नवा ह्युदेति
सूर्यस्य चौदास्यनिरूपताऽत्र

विलक्ष्यते द्वीपगते नदीस्थे ।।५८।।

*इह पीतसुमोपवने हासोल्लाससृतं वीक्ष्याह कविश्श्लोकद्वयेन –*

दृष्ट्वा वसन्ते तव हास्यलासं
पीतैस्सुमैस्सौरभमानसस्य
युवत्त्वकाले न न रे रमण्या:
वियोगतां याहि,रमस्व सौख्यै: ।।५९।।

जीवनोल्लासहर्षं त्वं कूर्दयन् ज्ञापयेस्सुखै:!
नवारम्भश्शुभारम्भो यात्रारम्भस्तवास्त्यसौ ।।६०।।

*इह च कृषकरूपधरः कल्पनाकारो लक्षितश्चित्रे कविना तन्माहात्म्यं बोधयति श्लोकद्वयेन –*

कृषकत्वं महत्तत्वं बिभर्त्तीह जगच्च यत्।
किन्तु नैर्धन्यदु:खाद्यैरात्महत्यां चरन्ति ते ।।६१।।

व्यङ्ग्यचित्रेण तत्सर्वं ज्ञापितं तत्त्वयास्ति ज्ञा!

परदु:खानि लोकैश्च ज्ञायतां तायतां दया ।।६२।।

*इह कारागारस्थितराममन्दिरमयोध्यास्थितं चित्रे दृष्ट्वोद्भावयति श्लोकद्वयेन –*

अयोध्या दु:खिता विप्र! गोशास्त्रितपोयुता:!
हा रामोऽपि स्वके देशे कारागारेऽद्य संस्थित:।।६३।।

मोदिराज्येऽभवच्चाद्य पुना रामस्सुखङ्गतः !
मन्दिरं दिव्यमत्रैव निर्मातव्यं द्रुतं जनैः ।।६४।।

*इह एकान्ते महातरुमूले स्थितं दृष्ट्वोक्तं कविना -*

महावृक्षमूले हि शान्तिस्सुलभ्या
भवेदित्यवश्यं भवैकान्तसक्त:
शिवाकान्तभक्त: प्रकृत्याङ्गणेऽस्मिन्
भ्रमन्नात्मना संयुनक्तीव न स्वम् ।।६५।।

*इह श्लोकद्वयेन मातृमहत्तां दर्शयति तद्दृश्यप्राप्तोत्साहः कविः -*

गौरवं दर्शयेन्नैव मातुर्वाऽपि गुरो: पुर: ।
ययाऽस्मभ्यं जनिर्दत्ता किं तत्र स्वप्रदर्शनम् ।।६६।।

सवस्त्रो वाऽपि नग्नो वा सारल्यचित्तशोभित:!
वर्तेत पित्रोस्सामक्ष्ये बालवत्सर्वदा जन: ।।६७।।

*इहापि प्रकृतिचित्रं विलोक्याह -*

अरे तिष्ठसि क्वाऽत्र किं मेघलोके
पुनर्यात्रया विश्रमं प्राप्तुकाम:
इयं सुप्रकृतिस्तवापि प्रकृतिं
स्ववर्णे समारञ्जयेत् कल्पनार्थिन् ।।६८।।

*इह शास्त्रप्रतियोगितागतं कल्पनाकारचित्रं विलोक्य श्लोकचतुष्टयेन तस्मिन्नुत्साहं जनयति -*

संयम्य वाचं हृदि सन्निधाय
शास्त्रं सुखीकृत्य नवं विधाय
यत्रापि वाऽरे सदसि प्रयाय

सङ्गर्जयेर्वाक्तपसां घनैस्त्वम् ।।६९।।

नवो विचारो नवकल्पना च
शास्त्रीयतथ्यस्य विवेचना च
समग्रमूलार्थकृतार्चनापि
सिध्येद् यशोभिः पुरुषं जगत्याम् ।।७०।।

सिद्धान्तवित्सिद्धगणं प्रयाति
ज्योतिष्फलं भाविनमुद्विभाति
नवैव शैली नवता च वाक्षु,
दैवज्ञकीर्ति: प्रसरेच्च दिक्षु ।।७१।।

चेद्वा सहस्राः प्रतियोगिनस्ते
शताः पुनर्वाऽपि विजेतुकामा:
न चात्मगुण्यप्रतिभाबलेषु
भवेस्सशङ्को, भव हार्दिकस्त्वम् ।।७२।।

*इह चित्रं तत्र न्यस्तं लेखं च दृष्ट्वा स्वविचारसमाहितं चापि तत्र कृत्त्वा प्रोच्यते कविनाऽत्र -*

न वर्णो न रूपो भवेन्मे कदाचित्
विजानामि मूलं सदाऽहं समेषां
न गन्धो निबन्धो मयीवाऽर्थयेश्चेत्
सुगन्धार्थबन्धस्य तत्त्वं विवेद्मि ।।७३।।

*इह कल्पनाकारः पक्षिवन्मुक्तो भवितुकामोऽस्ति,स जीवनाशोत्साहभृतश्चास्ति तस्येदृशं चित्रं लेखं च विलोक्य कविरत्र श्लोकसप्तकेन स्वकीयं भावं प्रकटयति -*

श्वासमोहं त्यजेत्प्राज्ञ: किन्तु मोहाढ्यजीवनम्।
सप्तवर्णसमारक्तं दृष्ट्वा वर्णायितम्मन: ।।७४।।

किन्तु हे कल्पनाकार! जीवनं दामिनीनिभम्।
आप्नुहीवाऽत्र मोदं चेत्परमोदं न विस्मरे: ।।७५।।

खगीं वृत्तिं समाश्रित्य केचित्तत्वं प्रयान्ति हि ।
केचित्पिपीलिकावृत्त्याऽऽश्रित्य श्रौतार्थनिश्चया: ।।७६।।

अत्र ते दर्शनं यच्च भाति लोकनिदर्शकम्।
वस्तुतस्सत्यलोकस्य प्रतीक्षेव समुन्नतम् ।।७७।।

अश्लीलत्वं समाश्रित्य सवस्त्रास्ते विवस्त्रका:!
अवस्त्रा विहगाश्चैते दिग्घीनाश्च दिगम्बरा:।।७८।।

अहं पक्षी अहं पक्षी वदाम्येतद्भवामि च ।
पक्षित्त्वं मौक्त्यविज्ञानं तदेव चात्मनस्सुखम् ।।७९।।

सैवैषा प्रकृतिस्सभ्या चरेत्को मादृशो नर:!
लोकाशाभिर्धनाशाभिर्बद्धो मानवदेहवान् ।।८०।।

*इह चास्तङ्गच्छन्तं सूर्यं दृष्ट्वा मनोभावं प्रकटयति कविः*
-

नोत्पादयेत्काँश्च नवाभिरामान्
भावान्दिनान्तेऽप्ययदर्कदृश्यम्
निशा नवैषाऽप्यभिनीय लोके
ह्यवातरेद्योषिति रम्यवाञ्छाम् ।।८१।।

*इह तारकशोभितरात्रौ नभस्तले स्थितं कल्पनाकारं दृष्ट्वोद्भावयति कविश्श्लोकद्वयेन -*

पुनस्तारकैर्भूषिता यामिनीयं
अवातीर्य मादृग्जनान्कर्षतीव
क्वचिद्राजतैस्तन्तुभिस्सर्जितेव
अहो यौवनाकृष्णशाटीव भाति ।।८२।।

विलोक्य स्वके मानसे चिन्तयामि
जगन्नो चितं नाभिधत्तं मयैतत्
यदा रात्रिरेषा न बुद्धा मयाऽहो
स्वहार्दाभिसृष्टिर्न साक्षाद्विभाति ।।८३।।

*एवमेवेहापि श्लोकद्वयेन किञ्चित्प्रकृतिदृश्यं विलोक्योद्भावनपरः कविः -*

अहो जीवनं मेऽप्यहो यौवनम्मे
ततश्चापि हर्षाश्रितं मानसं मे
निदर्श्य स्ववैचित्र्यवर्णाभिरागं
भ्रमज्जीवनं सुप्रकृत्यर्पितम्मे ।।८४।।

समाधिं कुतो यानि चैनां विलोक्य
कुतो योगचर्यामथो साधयानि
अरे नीलखं पश्य किञ्चित्क्षणं चेत्
शिवत्त्वं मयाऽत्रैव लब्धं समस्तम् ।।८५।।

*अत्र च शीतपर्वतक्षेत्रे तच्चित्रं वर्णयति -*

मरिष्यामि नाऽहं भ्रमन्शीतलोके
गमिष्यामि चाऽहं पुनर्हेमलोके
इयं रात्रिरैकान्तिकी पर्वतस्था
तरुश्रीतले सुस्थितश्चिन्तयामि ।।८६।।

*इह रात्रौ जागृतं वीक्ष्य कल्पनाकारं तच्चित्रोद्भावनं कुरुते -*

रात्रौ निद्रासु चाऽऽमग्नो लोकश्शेते मुदा गृहे।
अहम्मच्चित्तकल्पा च जागर्त्ति ग्रन्थचिन्तनैः ।।८७।।

*इह समुद्रतटगतचित्रविलोकनेन स्वहर्षं दर्शयति कविः -*

नैवोच्छलेद्यस्य युवत्त्वहर्षस्

समुद्रवैस्तीर्ण्यविलोकनेन
तटेषु चाञ्चल्ययुतो न यस्स्यात्
कोऽर्थो युवत्त्वेन च तेन यूना ।।८८।।

भ्रमामि स्वप्नलोकेषु सञ्जागृत्यापि हार्दिक:!
इयम्मज्जीवनस्याग्रे मद्वाञ्छैव प्रधावति ।।८९।।

*इह प्रकृतिसुखे काष्ठगृहच्छदिसि स्थितस्य चित्रं वर्णयति -*

खद्योतदीप्तिरथ मे लभतां न वेह
यानि क्व तत्सुखमना: नहि निश्चिनोमि
काष्ठालयस्य छदिसीव समास्थितोऽहं
काश्चित्पुनोऽद्भुतकथा परिलब्धुमीहे ।।९०।।

*इह नौकास्थितं विलोक्योक्तमेतत् -*

अरेऽहं जाह्नवीनीरे नौकास्थोऽस्मि शुभाशय:।
मन्ये मज्जीवनाकारो वर्ततेऽयञ्जलाशय:।।९१।।

*इह शीतलवायुसुखे तिष्ठन्तं विलोक्य कल्पनां करोति कविः -*

केयमाह्वयतीवाऽहो वायुश्शीतलसौख्यदः।
मत्कर्णेऽदृश्यलोकानां मन्त्रान्नीलपथो वदेत् ।।९२।।

कामेच्छेयं शतं हन्ति सैव संसृजतात्सुखम्।
प्रीतिरोमाञ्चसंसिक्ता रक्ते वहति वा पुनः।।९३।।

समर्थोऽपि पर: कश्चित्क्रीणीते परजीवनम्।
कामाऽऽशाऽऽक्तोऽपर: कश्चिद्विक्रीणीते निजं तनुम्।।९४।।

ईश्वरं लोक्यतां यात्वा क्वचिच्छान्ते सरोवरे।
बुद्बुत्तरङ्गहीने च भासस्सोऽप्यात्मरूपक:।।९५।।

केयं यस्या प्रतीक्षा ते प्रकृति: प्रेयसी च वा।
आत्मज्योतिषमादीप्य श्रीयते हीयते जनै: ।।९६।।

हिमालये क्वचिद्यात्वा शान्तो भूत्वापि सुस्थिर:।
जगतोऽस्थैर्यमालोक्य कुर्यादात्मविचिन्तनम् ।।९७।।

इदं तडागस्थजलं विलोक्य
हरिन्निभाभूश्रियमानुभूय
त्वक्स्पर्शसौख्यं ह्यनिलेन लब्धं
न नाकमिच्छामि मनोनृपोऽस्मि ।।९८।।

*इह ब्राह्मणैस्सहितस्य कल्पनाकारस्य चित्रं*
*विलोक्योदभावि कविना -*

सद्ब्राह्मणानां यदि सन्निकाशे
श्रौतार्थभाषेऽपि मखप्रकाशे
क्षणं प्रलब्धं यदि सज्जनेन
मोदाब्धि-रोमाञ्चन-चञ्चलोऽस्मि ।।९९।।

*इह काव्यरचनाहेतून् वक्ति कविः -*

अभ्यासशक्ती निपुणत्वमीक्षणं
लोकस्य यात्रा चरति प्रधीश्चेत्
तत्पूर्वदिष्ट्यापि सरस्वती सा
ददाति पद्यादिसुसृष्टिशस्त्रम् ।।१००।।

*अत्र जीवनमहत्त्वं वर्णयति -*

क्षणं गतं, न लभ्यमस्ति तत्सुरक्षयेद्बुध:
वयो पुनर्न वाप्नुतेऽभिनन्दयेद्यथोत्सवं
क्व लभ्यते मृतो जन:, क्व गुञ्जतीव सा मधु-
स्रविश्रिया सुगायकैस्तरङ्गिता च या ध्वनि:।।१०१।।

*इह होलिकोत्साहहृष्टः कविर्ब्रूते -*

क्रीडनं मोदनं पातः पङ्के वा गोमये जले।
भूमौ नृत्यं च विविधं होलिकायां चरन्ति ते।।१०२।।

*स्मितास्यस्य प्रसन्नतायाश्च मूल्यं वक्ति –*

जीवनं चाल्पदिवसं नानाक्लेशैश्च बाधितम्।
किन्तु विस्मृत्य तत्सर्वं सुस्मेरस्स्यात् सदा जन:।।१०३।।

*इह नैराश्यमाहात्म्यमाख्याति –*

अनाशात्त्वं महत्सौख्यं चाशाभिर्दासतां व्रजेत्।
त्यक्ताशस्तिष्ठति प्राज्ञस्तं पर: क: पराजयेत्।।१०४।।

*इह श्लोकद्वयेन सूर्यास्ते सूर्योदये वा सरयूतीरस्थितस्य कल्पनाकारस्य चित्रमुपस्थापयति -*

सूर्यास्तकाले सरयूतटे त्वं
खट्वां समारूह्य समास्थितोऽसि
रामस्य भूरद्य च राजनीते:
भूमिर्विभातीव वदानि किं ते ।।१०५।।

सूर्योदये यस्सरयूतटे स्यात्
रामं स्मरेद्दिव्यचरित्रदेवम्
आदर्शतां तत्परिगृह्य सोऽपि
श्रीरामदर्शै: पुरुषोत्तमस्स्यात् ।।१०६।।

*अत्राशिषा युङ्क्ते कल्पनाकारं, चित्रसौख्यान्वितः कविः -*

जयन्तु ते दृश्ययशांसि लोके

भरन्तु सौख्यानि हरन्तु शोकान्
नवानुभूतिस्तव चित्रहार्दा-
ऽऽश्रयैरतो वाक्शरणं गतोऽस्मि ।।१०७।।

********

| ।। हिमांशुगौडस्य संस्कृतकाव्यरचनाः ।। | | |
|---|---|---|
| १ | श्रीगणेशशतकम् | (गणेशभक्तिभृतं काव्यम्) |
| २ | सूर्यशतकम् | (सूर्यवन्दनपरं काव्यम् ) |
| ३ | पितृशतकम् | (पितृश्रद्धानिरूपकं काव्यम्) |
| ४ | मित्रशतकम् | ( मित्रसम्बन्धे विविधभावसमन्वितं काव्यम् ) |
| ५ | श्रीबाबागुरुशतकम् | (श्रीबाबागुरुगुणवन्दनपरं शतश्लोकात्मकं काव्यम्) |
| ६ | भावश्रीः | ( पत्रकाव्यसङ्ग्रहः ) |
| ७ | वन्द्यश्रीः | (वन्दनाभिनन्दनादिकाव्यसङ्ग्रहः) |
| ८ | काव्यश्रीः | (बहुविधकवितासङ्ग्रहः) |

| | | |
|---|---|---|
| ९ | भारतं भव्यभूमिः | ( भारतभक्तिसंयुतं काव्यम् ) |
| १० | दूर्वाशतकम् | (दूर्वामाश्रित्य विविधविचारसंवलितं शतश्लोकात्मकं काव्यम्) |
| ११ | नरवरभूमिः | (नरवरभूमिमहिमख्यापकं खण्डकाव्यम्) |
| १२ | नरवरगाथा | (पञ्चकाण्डान्वितं काव्यम्) |
| १३ | नारवरी | (नरवरस्य विविधदृश्यविचारवर्णकं काव्यम् ) |
| १४ | दिव्यन्धरशतकम् | (काल्पनिकनायकस्य गुणौजस्समन्वितं काव्यम्) |
| १५ | कल्पनाकारशतकम् | (कल्पनाकारचित्रकल्पनामोदवर्णकम्) |
| १६ | कलिकामकेलिः | (कलौ काममनृत्यवर्णकं काव्यम्) |

---

[1] नीरस्य तरः जलयानमिति तात्पर्यम् । मोदे – प्रसीदामीति ।

[2] नराणां समूहो नारः, नारः सौख्यदृश्यं लभते।

[3] इह शब्दप्रशंसनमस्ति । नराश्शब्दैरेव सर्वलोकान् जयन्ति इव । जन आत्मनि तुष्यत्यपि शैवैः (कल्याणमयैः) शब्दैरेव । इह मृते लोके अमृतं स्रवन्तः शब्दाः, मया आत्मनि अनुविष्टा इव लक्ष्यन्ते ।